# Document Information

Text title : laghujAtaka
File name : laghujAtaka.itx
Category : jyotiSha
Location : doc_z_misc_sociology_astrology
Author : Varahamihira
Language : Sanskrit
Subject : Jyotish
Transliterated by : Radu Canahai clradu at yahoo.com
Proofread by : Radu Canahai clradu at yahoo.com
Latest update : February 04, 2005
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ वराहमिहिराचार्यस्य लघुजातकम् ॥

edition: KRISHNADAS ACADEMY, VARANASI-221001, 1983

## अथ लघुजातकम् ।



## अथ राशिप्रभेदाध्यायः ॥ १॥

यस्योदयास्तसमये सुरकुटनिघृष्टचरणकमलोऽपि ।
कुरुतेऽञ्जलिं त्रिनेत्रः स जयति धाम्नां निधि सूर्यः ॥ १॥

होराशास्त्रं वृत्तैर्मया निबधं नरीक्ष्य शास्त्राणि ।
यत्तस्याप्यार्याभिः सारमहं सम्प्रवक्ष्यामि ॥ २॥

यदुपचितमन्यजन्मनि शुभाऽशुभं तस्य कर्मणः पक्तिम् ।
व्यञ्जयति शास्त्रमेतत् तमसि द्रव्याणि दीप इव ॥ ३॥

शीर्षमुखबाहुहृदयोदराणि कटिबस्तिगुह्यसंज्ञनि ।

अरू जानू जघे चरणाविति राशयोऽजाद्याः ॥ ४॥

कालनरस्यावयवान् पुरुषाणां चिन्तयेत्प्रसवकाले ।
सदसद्ग्रसंयोगात् पुष्टाः सोपद्रवास्ते च ॥ ५॥

अरुणसितहरितपाटलपांडुविचित्राः सितेतरपिशंगौ ।
पिङ्गलकर्बु रबभ्रुकमलिना रुचयो यथासंख्यम् ॥ ६॥

पुंस्त्री-क्रूराक्रूरौ चर-स्थिर-द्विस्वभावसंज्ञाश्च ।
अजवृषमिथुनकुलिराः पंचमनवमैः सहैन्द्याद्याः ॥ ७॥

कुजशुक्रज्ञेन्द्वर्कज्ञशुक्रकुजजीवसौरियमगुरवः ।
मेषा नवांशकानामजमकरतुलाकुलीराद्याः ॥ ८॥

स्वगृहाद् द्वादशभागाः द्रेष्काणाः प्रथमपञ्चनवपानाम् ।
होरे विषमेऽर्केन्द्वोः समपाशौ चन्द्रतीक्ष्णांश्वोः ॥ ९॥

कुजयमजीवज्ञसिताः पञ्चेन्द्रयवसुमुनीन्द्रयांशानाम् ।
विषमेषु समर्क्षेषूत्क्रमेण त्रिंशांशपाः कल्प्याः ॥ १०॥

नृचतुष्पदकीताप्या बलिनः प्राग्दक्षिणापरोत्तरगाः ।
सन्ध्याद्युरात्रिबलिनः कीटा नृचतुष्पदाश्चैवम् ॥ ११॥

मेषवृषद्वन्द्विसिंहाश्चतुष्पदा मकरपूर्वभागश्च ।
कीटः कर्कटराशिः सरीसृपो वृश्चिकः कथितः ॥ १२॥

मकरस्य पश्चिमार्धं ज्ञेयो मीनश्च जलचरः ख्यातः ।
मिथुनतुलाघटकन्या द्विपदाख्या षन्विपूर्वभागश्च ॥ १३॥

अधिपयुतो दृष्टो वा बुधजीवयुतेक्षितश्च यो राशिः ।
स भवति बलवान्न यदा युक्तो दृष्टोऽपि वा शेषैः ॥ १४॥

तनुधनसहजसुहृत्सुतरिपुजायामृत्युधर्मकर्माख्याः ।
व्यय इति लग्नाद्भावाश्चतुरस्राख्येऽष्टमचतुर्थे ॥ १५॥

पातालहिबुकवेश्मसुखबन्धुसंज्ञाश्चतुर्थभावस्य ।
नव-पञ्चमे त्रिकोणे नवमर्क्षं त्रित्रिकोणं च ॥ १६॥

धीः पञ्चमे तृतीयं दुश्चिक्यं सप्तमं तु यामित्रम् ।
द्युनं द्युनं च तद्वच्छिद्रमष्ढं द्वादशं रिष्फम् ॥ १७॥

केन्द्रचतुष्टयकण्टकलग्नाऽस्तदशमचतुर्थानाम् ।
संज्ञा परतः पणफरमापोक्लिमं च तत्परतः ॥ १८॥

त्रिषडेकादशदशमान्युपचयभवनान्यतोऽन्यथाऽन्यानि ।

वर्गोत्तमा नवांशाश्चरादिषु प्रथममध्यान्त्याः ॥ १९॥

मेषाद्याश्चत्वारः सधन्विमकराः क्षपाबला ज्ञेयाः ।
पृष्ठोदया विमिथुनाः शिरसान्ये ह्युभयतो ज्ञेयाः ॥ २०॥

अजवृषमृगाङ्गनाकर्कमीनवणिजांशकेष्विनाद्युच्चाः ।
दशशिख्यष्टाविंशतितिथीन्दियत्रिनवविंशेषु ॥ २१॥

उच्चान्नीचं सप्तममर्कादीनां त्रिकोणसंज्ञानि ।
सिंहवृषाजप्रमदा-कार्मुकभृत्तौलिकुम्भधराः ॥ २२॥

गृहहोराद्रेष्काणा नवभागो द्वादशांशकस्त्रीम्शः ।
वर्गः प्रत्येतव्यो ग्रहस्य यो यस्य निर्दिष्टः ॥ २३॥

इति लघुजातके राशिप्रभेदाध्यायः ॥

## अथ ग्रहभेदाध्यायः ॥ २॥

आत्मा रविः शीतकरस्तु चेतः
सत्त्वं धराजः शशिजोऽथ दाणी ।
ज्ञानं सुखं चेन्द्रगुरुर्मदश्च
शुक्रः शनिः कालनरस्य दुःखम् ॥ १॥

आत्मादयो गगनगैर्वलिभिर्वलवत्तराः ।
दुर्बलैर्दुर्बलाग्येया विपरीतः शनिः स्मृतः ॥ २॥

राजा रविः शशधरश्च बुधः कुमारः
सेनापतिः क्षितिसुतः सचिवौ सितेज्यौ ।
भृत्यस्तथा तरणिजः सबला ग्रहाश्च
कुर्वन्ति जन्मसमये निजमेव रूपम् ॥ ३॥

प्राच्यादीशा रविसितकुजराहुयमेन्दुसौम्यवाक्पतयः ।
शीणेन्द्वर्गयमाराः पापास्तैः संयुतः सौम्यः ॥ ४॥

क्लीबपती बुधसौरी चन्द्रसितौ योषितां नृणां शेषाः ।
ऋग्गर्थसामयजुषामधिपा गुरुसौम्यभौमसिताः ॥ ५॥

जीवैतौ विप्राणां क्षत्राणां रविकुजौ विशां चन्द्रः ।
शूद्राधिपः शशिसुतः शनैश्चरः सङ्करभवानाम् ॥ ६॥

बलवान् स्वगृहोच्चांशे मित्रर्क्षे वीक्षितः शुभैश्चापि ।

चन्द्रसितौ स्त्रीक्षेत्रो पुरुषक्षेत्रोपगाः शेषाः ॥ ७॥

प्राच्यादिषु जीवबुधौ सूर्यारौ भास्करिः शशाङ्कसितौ ।
उदगयने शशिसूर्यौ वक्रेऽन्ये स्निग्धविपुलाश्च ॥ ८॥

अहनि सितार्कसुरेज्या द्युनिशं ज्ञो नक्तमिन्दुकुजसौराः ।
स्वदिनादिष्वशुभशुभा बहुलोत्तरपक्षयोर्बलिनः ॥ ९॥

मन्दारसौम्यवाक्पतिसितश्चन्द्रार्का यथोत्तरं बलिनः ।
नैसर्गिकबलमेतद्बलसाम्येऽस्माद् बलाधिकता ॥ १०॥

मित्रक्षेत्रे स्वोच्चे स्वहोरायां स्वभवनत्रिकोणे च ।
स्वद्रेष्कणे स्वांशे स्वदिने च बलान्विताः सर्वे ॥ ११॥

दशम-तृतीये नव-पञ्चमे चतुर्थाष्टमे कलत्रं च ।
पश्यन्ति पादवृद्ध्या फलानि चिवं प्रयच्छन्ति ॥ १२॥

पूर्णम्पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः ।
चतुरस्त्र भूमिसुतः सितार्कबुधहिमकराः कलत्रं च ॥ १३॥

॥ इति लघुजातके ग्रहभेदाध्यायः द्वितीयः ॥

## अथ ग्रहमैत्रीविवेकाध्यायः ॥ ३॥

मित्राण्यर्काजीवो ग़्यगुरू ज्ञौतौ विभास्करा विकुजा ।
दीन्द्वरा विकुजरवीन्दवश्च केषांचिदाचार्यणमयो ॥ १॥

यत्रू मन्दसितौ समग्च ययिजो मित्राणि येषा रवे-
स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः ।
जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्की समौ
मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे ॥ २॥

सूरेः सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा
सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी
शुक्रग़्यौ सुहृदौ समः सुरगुरुः सौरेस्तथान्येऽरय-
स्तत्लाले च दशाऽयबन्धुसहजस्वाऽन्येषु मित्रं स्थितः ॥ ३॥

मित्रमुदासीनोऽरिर्व्याख्याता ये निसर्गभावेन ।
तेऽधिसुहृन्मित्रसमास्तत्कालमुपस्थिताश्चिन्त्याः ॥ ४॥

मूलत्रिकोणषष्ठत्रिकोणनिधनैकराशिसप्तमगाः ।

एकैकस्य यथा सम्भवन्ति तात्कालिका रिपवः ॥ ५॥

॥ इति लघुजातके ग्रहमैत्रीविवेकाध्यायस्तृतीयः ॥

## अथ ग्रहस्वरुपाध्यायः ॥ ४॥

रविस्वरूपम् -

चतुरस्त्रो नातुच्चस्तनुकेशः पैत्तिकोऽस्थिसारश्च ।
शूरो मधुपिंगाक्षो रक्तश्यामः पृतुश्चार्कः ॥ १॥

चन्द्रस्वरूपम् -

स्वच्छः प्राज्ञो गौरश्चपलः कफवातिको रुधिरसारः ।
मृदुवाग् घृणी प्रियसखस्तनुवृत्तश्चन्द्रमाः प्रांशुः ॥ २॥

कुजस्वरूपम्

हिम्स्त्रो ह्वस्वस्तरुणः पिंगाक्षः पैत्तिको दुरार्धषः ।
चपलः सरक्तगौरो मज्जासारश्च माहेयः ॥ ३॥

बुधस्वरूपम्

मध्यमरुपः प्रियवाग् दुर्वश्यामः शिराततो निपुणः ।
त्वक्सारस्त्रीस्थूणः सततं हृष्वस्तु? चन्द्रसुतः ॥ ४॥

गुरुस्वरूपम् -

मधुनिभनयनो मतिमनुपचितमांसः कफत्मको गौरः ।
इष्टिपङ्गलेशो मेदःसारो गुरुविर्घश्चः ॥ ५॥

शुक्रस्वरूपम्

श्यामो विकुष्टपर्वा कुतिलासितमूर्धजः सुखी कान्तः ।
कफवातिको मधुरवाग्बःऋगूपुत्रः शुक्रसारश्च ॥ ६॥

शनिस्वरूपम् -

कृशदीर्घः पिंगाक्षः? कृष्णः पिशुनोऽनिलप्रकृतिः ।
स्थूलनखदन्तरोमा शनैश्चरो स्नाशुसारश्च ॥ ७॥

स्वरूपप्रयोजनम्

एति ग्रहा बलिष्ठाः प्रसूतिकले नृणां स्वमूर्तीसमम् ।
कुर्युर्देहं नियते बहवश्च समागता मिश्रम् ॥ ८॥

॥ इति लघुजातके ग्रहस्वरूपाध्यायश्चतुर्थः ॥

## अथ गर्भाधानाध्यायः ॥ ५॥

आधानेऽस्तगृहं यत्तच्छिलो मैथूने पुमान् भवति ।
सायासमसद्युतवीक्षिते विदग्धं शुभैरस्ते ॥ १॥

सौरांशेऽब्जांशे वा चन्द्रः सौरान्वितोऽथ हिबुके वा ।
शान्तो दीपो जन्मन्याधाने चेन्न रविदृष्टः ॥ २॥

चन्द्रो यावत्संख्ये द्वादशभागे निषेकसमये स्यात् ।
तस्मात् तावति राशौ जन्मेन्दौ सम्भवे मासि ॥ ३॥

उदयति मृदुभांशे सप्तमस्थे च मन्दे
यदि भवति निषेकः सूतिमब्दत्रयेण ।
शशिनि तु विधिरेष द्वादशोऽब्दे प्रकिर्या-
न्निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या ॥ ४॥

यमवक्रौ द्यूनेऽर्कात् पुंसो रोगप्रदौ स्त्रियश्चन्द्रात् ।
सन्मध्यगयोर्मृत्युस्तदेकयुतदृष्टयोश्चैवम् ॥ ५॥

कललधनावयवास्थित्वग्रोमस्मृतिसमुद्भवाः क्रमशः ।
मासेषु शुक्रकुजजीवसूर्यचन्द्रार्किसौम्यानाम् ॥ ६॥

अशनिद्वेगप्रसवाः परतो लग्नेशचन्द्रसूर्याणाम् ।
कलुषैः पीडा पतनं निपीडितैर्निर्मलैः पष्टिः ॥ ७॥

बलयुक्तौ स्वगृहांशेष्वर्कसितावुपचयर्क्षगौ पुंसाम् ।
स्त्रीणां वा कुजचन्द्रौ यदा तदा गर्भसम्भवो भवति ॥ ८॥

लग्ने बलिनि गुरौ वा नवपञ्चमसंस्थितेऽपि वा भवति ।
योगा हतबीजानामफला वीणेव वधिराणाम् ॥ ९॥

विषमर्क्षे विषमांशे संस्थिताश्च गुरुशशाङ्कलग्नार्काः ।
पुञ्जन्मकराः समभेषु योषितां समनवांशगताः ॥ १०॥

बलिनौ विषमेऽर्कगुरू नरं स्त्रियं समगृहे कुजेन्दुसिताः ।
यमलं द्विशरीरांशेष्विन्दुजदृष्टाः स्वपक्षसमम् ॥ ११॥

लग्नाद्विषमोपगतः शनिश्चरः पुत्रजन्मदो भवति ।
निगदितयोगबलाबलमवलोक्य विनिश्चयो वाच्यः ॥ १२॥

॥ इति लघुजातके गर्भाधानाध्यायः पञ्चमः ॥

## अथ सूतिकाध्यायः ॥ ६॥

गुरुशशिरवयः सत्त्वं रजः सितज़्यौ तमोऽर्कसुतभौमौ ।
एतेऽन्तरात्मनि स्वां प्रकृतिं जन्तोः प्रयच्छन्ति ॥ १॥

सत्त्व रजस्तमो वा त्रिंशांशे यस्य भास्करस्तादृक् ।
बलिनः सदृशी मूर्तिर्बुध्वा वा जातिकुलदेशान् ॥ २॥

पूर्वविलग्ने यादृक् नव भागस्तादृशी भवति मूर्तिः ।
यो वा ग्रहो बलिष्ठस्तत्काले तादृशी वाच्या ॥ ३॥

चन्द्रे लग्नमपश्यति मध्ये वा शुक्रसौम्ययोश्चन्द्रे ।
जन्म परोक्षस्य पितुर्य्मोदये वा कुजे वाऽस्ते ॥ ४॥

पापयुतोऽर्कः सेन्दुः पश्यति होरां न चन्द्रमपि जीवः ।
पश्यति सार्कं नेन्दु यदि जीवो वा परैर्जातः ॥ ५॥

द्वरं वास्तुनि केन्द्रोपगाद् ग्रहादसति वा विलग्नर्क्षात् ।
दीपोऽर्कादुदयाद् वर्तिरिन्दुतः स्नेहनिर्देशः ॥ ६॥

अदृढं नवमथ दग्धं चित्रं सुदृढं मनोरमं जीणम् ।
गृहमर्कादिकवीर्यात् पतिभवनं सन्निकृष्टैश्च ॥ ७॥

गुरुरुच्चो दशमस्थो द्वित्रिचतुर्भूमिकं करोति गृहम् ।
धनुषि सबलस्त्रिशालं द्विशालमन्येषु यम्लेषु ॥ ८॥

षड्निवान्त्याः पादाह् खट्वाङ्गान्यन्तरालभवनानि ।
विनतत्वं यमलर्क्षैः क्रूरैस्तत्तुल्य उपघातः ॥ ९॥

छागे सिंहे वृषे लग्ने तत्स्थे सौरेऽथवा कुजे ।
राश्यंशसदृशे गात्रे जायते नालवेष्टितः ॥ १०॥

ज़्येयानि ताम्रमणिहेमयुक्तिरौप्याणि मौक्तिकं ओहम् ।
अर्कद्यैर्बलवद्भिः स्वस्थाने हेम जीवेऽपि ॥ ११॥

शशिलग्नान्तरसंस्थग्रहतुल्याश्चोपसूतिका ज्ञेयाः ।
उदगर्धेऽभ्यन्तरगा बाह्याश्चक्रस्य दृऱ्६इश्येऽर्धे ॥ १२॥

॥ इति लघुजातके सूतिकाध्यायः षष्ठः ॥

## अथ अरिष्टाध्यायः ॥ ७॥

षष्टेऽष्टमेऽपि चन्द्रः सद्यो मरणाय पापसंदृष्टः ।
अष्टाभिः शुभदृष्टो वर्षैर्मश्रिस्तदर्धेन ॥ १॥

शशिवत्सौम्याः पापैर्वक्रिभिरवलोकिता न शुभदृष्टाः ।
मासेन मरणदाः स्युः पापजितो लग्नपश्चास्ते ॥ २॥

राश्यन्तस्थैः पापैः सन्ध्यायां हिममयूखहोरायाम् ।
मृत्युः प्रत्येलस्थैः केन्द्रेषु शशाङ्कपापैश्च ॥ ३॥

चक्रपाक्पश्चार्द्धे पापशुभैः कीटभोदये मृत्युः ।
निधनचतुष्टयगैर्वा क्रूरैः क्षीणे शशिन्युदये ॥ ४॥

सप्ताष्टान्त्योदयगे शशिनि सपापे शुभेक्षणवियुक्ते ।
न च कण्टकेऽस्ति कश्चिच्छुभस्त्रदा मृत्युरादेश्यः ॥ ५॥

क्षीणेन्दौ द्वदशगे लग्नाष्टमाशिसंस्थितैः पापैः ।
सौम्यरहिते च केन्द्रे सद्यो मृत्युर्विनिर्देश्यः ॥ ६॥

चतुरस्त्रे सप्तमगः पापान्तस्थः शशी मरणदाता ।
उदयगतो वा चन्द्रः सप्तमराशिस्थितैः पापैः ॥ ७॥

सोपप्लवे शशांके सक्रूरे लग्नगे कुजेऽष्टमगे ।
मृत्युर्मात्रा सार्द्ध चन्द्रवदर्के च शस्त्रेण ॥ ८॥

लग्न-द्वादश-नवमाऽष्टमसंस्थैश्चन्द्र-सौरि-सूर्य।आरैः ।
जातस्य भवति मरणं यदि न बलयुतः पतिर्वचसाम् ॥ ९॥

सुतमदननवान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः ।
भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा ॥ १०॥

योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनुगृहमथवा ।
पापैर्दृष्टे बलवति मरणं वर्षस्यान्तः किल मुनिगदितम् ॥ ११॥

॥ इति लघुजातके अरिष्टाध्यायः सप्तमः ॥

## अथ अरिष्टभण्गाध्यायः ॥ ८॥

सर्वानिमानतिबलः स्फुरदंशुजालो
लग्नस्थितः प्रशमयेत्सुरराजमन्त्री ।
एको बहूनि दुरितानि सुदुस्तराणि
भक्त्या प्रयुक्त इव शूलधरप्रणामः ॥ १॥

लग्नाधिपोऽतिबलवानशुभैरदृष्टः
केन्द्रस्थितैः शुभखगैरवलोक्यमानः ।
मृत्युं विधूय विदधाति शुदीर्घमायुः
सार्द्धं गुणैर्बहुभिरूर्जितया च अक्ष्म्या ॥ २॥

लग्नादष्टमवर्त्यपि बुधगुरुभार्गवदृकाणगश्चन्द्रः ।
मृत्युं प्राप्तमपि नरं परिरक्षत्येव निर्व्याजम् ॥ ३॥

चन्द्रः सपूर्णतनुः सौम्यर्क्षगतः स्थितः शुभस्यान्तः ।
प्रकरोति रिष्टभङ्गं विशेषतः शुक्रसंदृष्टः ॥ ४॥

बुधभार्गवजीवानामेकतमः केन्द्रमागतो बलवान् ।
क्रूरसहायो यद्यपि सद्यो रिष्टस्य भङ्गाय ॥ ५॥

रिपुभवनगतोऽपि शशीगुरुसितचन्द्रात्मजदृकाणस्थः ।
गुरुड इव भोगिदष्टं परिरक्षत्येव निर्व्याजम् ॥ ६॥

सौम्यद्यमध्यगतः सम्पूर्णः स्निग्धमण्डलः शशभृत् ।
निःशेषरिष्टहन्ता भुजङ्गलोकस्य गरुड इव ॥ ७॥

शशभृति पूर्णशरीरे शुक्ले पक्षे निशाभवे काले ।
रिपुनिधनस्थे रिष्टं प्रभवति नैवात्र जातस्य ॥ ८॥

प्रस्फुरितकिरणजाले स्निग्धामलमण्डले बलोपेते ।
सुरमन्त्रिणी केन्द्रगते सर्वारिष्टं शमं याति ॥ ९॥

सौम्यभवनोपयाताः सौम्यांशकगाः सौम्यदृक्काणस्थ्हाः ।
गुरुचन्द्रकाव्यशशिजाः सर्वेऽरिष्टस्य हन्तारः ॥ १०॥

चन्द्राध्यासितरशेरधिपः लेन्द्रे शुभग्रहो वापि ।
प्रशमयति रिष्टयोगं पापानि यथा हरिस्मरणम् ॥ ११॥

पापा यदि शुभ्वर्गे सौम्यैर्दृष्टाः शुभेशवर्गस्थैः ।
निघ्नन्ति तदा पार्तिं विरक्ता यथा युवतिः ॥ १२॥

राहुस्त्रिषष्ठलाभे लग्नात् सौम्यैर्निरीक्षितः सद्यः ।

नाशयति सर्वदुरितं मरुत इव तूलसंघातम् ॥ १३॥

शीर्षोदयेषु राशिषु सर्वे गगनाधिवासिनः सूतौ ।
प्रकृतिस्थश्चारिष्टं विलीयते धृतमिवाग्निस्थम् ॥ १४॥

तत्काले यदि विजयी शुभग्रहः शुभनिरीक्षितोऽवश्यम् ।
नाशयति यर्वारिष्टं मारुत इब पादपान् प्रबलः ॥ १५॥

पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णे तथाऽह्नि शुभाशुभदृॠ६इश्यमानः ।
तं चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशुं न हन्ति ॥ १६॥

॥ इति लघुजातके अरिष्टमभङ्गाध्यायोऽष्टमः ॥

## अथ आयुर्दयाध्यायः ॥ ९॥

राश्यंशकला गुणिता द्वादशनवभिर्ग्रहस्य भगणेभ्यः ।
द्वादसहृतावशेषेऽब्दमासदिननाडिकाः कपशः (कृपशः) ॥ १॥

होरादायोऽप्येवं बलयुक्ताऽन्यानि राशितुल्यानि ।
वर्षाणि सम्प्रयच्छत्यनुपाताच्चांशकादिफलम् ॥ २॥

वर्गोत्तमस्वराशिद्रेष्काणनवांशके सकृद्विगुणम् ।
वक्रोच्चयोस्त्रिगुणितं द्वित्रिगुणत्वे सकृत्रिगुणम् ॥ ३॥

त्र्ंशमवक्रो रिपुभे नीचेऽर्घ सूर्यलुप्तकिरणश्च ।
क्षपयति स्वायुर्दायान्नास्तं यातौ रविजशुक्रौ ॥ ४॥

सर्वार्धत्रिचतुर्थेन्द्रियर्तुभागान् व्ययाद्धरन्त्यशुभाः ।
सन्तोऽर्धमतो वामं बलवानेकर्क्षगेष्वेकः ॥ ५॥

इति लघुजातके आयुर्दायाध्यायः नवमः ॥

## अथ दशान्तर्दशाध्यायः ॥ १०॥

शोध्यक्षेपविशुद्धः कालो यो येन जीविते दत्तः ।
स विचिन्त्या तस्य दशा स्वदशासु फलप्रदाः सर्वे ॥ १॥

लग्नार्कशशाङ्कानां यो बलवां स्तद्दशा भवेत् प्रथमा ।
तत्केन्द्रपणफरापोक्लिमगतानां बलाच्छेषाः ॥ २॥

मित्रोच्चस्वगृहाम्शोपगतानां शोभना दशाः सर्वाः ।
स्वोच्चाभिलाषिणमपि न तु कथितविपर्ययस्थानाम् ॥ ३॥

होरादशा दृकाणैः पूजितमध्याधमा चरे क्रमशः ।
द्विशरीरे विपरीता स्थिरे तु पापेष्टमध्यफला ॥ ४॥

एकर्क्षेऽर्ध त्र्यंशं त्रिकोणयोः सप्तमे तु सप्तांशम् ।
चतुरस्त्रयोस्तु पादं पाचयति गतो ग्रहः स्वगुणैः ॥ ५॥

भागाः सदृशच्छेदैर्विवर्जिताः संयुता दशाच्छेदाः ।
प्रत्यांशा गुणकाराः पृथक् पृथक् चान्तर्दशास्ताः ॥ ६॥

इति लघुजातके दशान्तर्दशाध्यायः दाशमः ॥

## अथाष्टकवर्गाध्यायः ॥ ११॥

केन्द्रायाष्टद्विनवरुवकः स्वादार्किभौमतश्च शुभः ।
षड्सप्तान्त्येषु सितात् षडायधीधमर्गो जीवात् ॥ १॥

उपचयगोऽर्कश्चन्द्रादुपचयनवमान्त्यधीगतः सौम्यात् ।
लग्नादुपचयबन्धुव्ययस्थितः शोभनः प्रोक्तः ॥ २॥

शश्युपचयेषु लग्नात्साद्यमुनिः स्वात्कुजात्वनवधीषु ।
सूर्यत् साष्टस्मरगस्त्रिषडायसुतेषु सूर्यसुतात् ॥ ३॥

ज्ञात्केन्द्रत्रिसुतायाष्टगो गुरोर्व्ययायमृत्युकेन्द्रेषु ।
त्रिचतुःसुतनवदशमद्युनायगश्चन्द्रमाः शुक्रात् ॥ ४॥

भौमः स्वादायस्वाष्टकेन्द्रगस्त्र्यायषड्सुतेषु बुधात् ।
जीवादृशाय-शत्रु-व्ययेष्विनादुपचय-सुतेषु ॥ ५॥

उदयादुपचयतनुषु त्रिषडायेष्विन्दुतः समो दशमः ।
भृगुतोन्त्यषडष्टाय्ष्वसितात् केन्द्रायनववसुषु ॥ ६॥

सौम्योऽन्त्यषण्णवायात्मजेष्विनात् स्वात् त्रितनुदशयुतेषु ।
चन्द्राद्विरिपुदशायाष्टसुखगतः सादिषु विलग्नात् ॥ ७॥

प्रथमसुखायद्विनिधनधर्मेषु सितात् त्रिधीसमेतेषु ।
साशास्मरेषु सौरारयोर्व्ययायरिपुवसुषु गुरोः ॥ ८॥

जीवो भौमाद्व्यायाष्टकेन्द्रगोऽर्कात्सधर्मसहजेषु ।
स्वात् सत्रिकेषु शुक्रान्नवदशलाभस्वधीरिपुषु ॥ ९॥

शशिनः स्वरत्रिकोणार्थलाभगस्त्रिरिपुधीव्ययेषु यमात् ।
नवदिक्सुखाध्यधीस्वायशत्रुषु ज्ञात्सकामगो लग्नात् ॥ १०॥

शुक्रो लग्नादासुतनवाष्टलाभेषु सव्ययश्चन्द्रात् ।
स्वात्सदिगसितात्त्रिसुखात्मजाष्ट्दिग्धर्मलाभेषु ॥ ११॥

वस्वन्त्यायेष्वर्कान्नवदिग्लाभाष्टधीस्थितो जीवात् ।
ज्ञात्त्रिसुतनवायारिष्वायसुतापोऽविलभेषु कुजात् ॥ १२॥

स्वात्सौरिस्त्रिसुतायारिगः कुजादन्त्यकर्मसहितेषु ।
स्वायाष्टकेन्द्रगोऽर्काच्छ्त्रात्वष्ठान्त्यलाभेषु ॥ १३॥

त्रिषडायगः शशाङ्कादुदयात्ससुखाद्यकर्मगोऽथ गुरोः ।
सुतषट्व्ययायगो ज्ञात् व्ययायरिपुदिङ्नवाष्टस्थः ॥ १४॥

स्थानेष्वेतुषु शुभाः शेषेष्वहिता भवन्ति चाष्टानाम् ।
अशुभशुभविशेषफलं ग्रहाः प्रयच्छन्ति चारगताः ॥ १५॥

इति लघुजातके अष्टकवर्गाध्याय एकादशः ॥

## अथ प्रकीर्णाध्यायः ॥ १२॥

राविवर्ज्यं द्वादशगैरनफा चन्द्राद्द्वितीयगैः सुनफा ।
उभयस्थितैर्दुरुधरा केमद्रुमसंज्ञकोऽतोऽन्यः ॥ १॥

सच्छिलं विषयसुखान्वितं प्रभु ख्यातियुक्तमनफायाम् ।
सुनफयां धीधनकिर्तितयुक्तशात्मार्जितैश्वर्याम् ॥ २॥

बहुभृत्यकुटुम्बारम्भं सुखभोगान्वितं च दौर्धरिके ।
भृतकं दुखितमधनं जात केमद्रुमे विद्यात् ॥ ३॥

भौमः शूरश्चण्डो महाधनो ज्ञानवान् बुधो निपुणः ।
ऋद्धः शुक्रः सुखितो गुरुर्गुणाढ्यो नृपतिपूज्यः ॥ ४॥

बह्वारम्भः सौरिर्बहुभृत्यः पूजितो गुणैर्विद्धः
एषां गुणैः समगुणा ज्ञेया योगोद्भवाः पुरुषाः ॥ ५॥

सूर्याद्द्वितीयमृक्षं विशेस्थानं प्रकीर्तितं यवनैः ।

तच्चेष्टग्रहयुक्तं जन्मनि चेष्टासु च विलग्नम् ॥ ६॥

यन्त्रज्ञं पापरतं निपुणं क्रूरं च शस्त्रवृत्तिं च ।
धातुज्ञं च क्रमशश्चन्द्रादिभिरन्वितः सूर्यः ॥ ७॥

चन्द्रोऽङ्गारकपूर्वैः कूटज्ञं प्रश्रितं कुलाभ्यधिकम् ।
वस्त्रव्यवहारज्ञं क्रमेण पौनर्भवं चापि ॥ ८॥

मल्लो रक्षोऽन्यस्त्रीसक्तो दुःखान्वितः कुजो ज्ञाद्यैः ।
ज्ञौ जीवाद्यैर्गीतज्ञं वाग्मिनं महेन्द्रजालज्ञम् ॥ ९॥

जीवः सितेन बहुगुणमसितेन समन्वितोऽत्र घटकारम् ।
स्त्रीस्वं मन्देन सितस्त्रिभिरप्येवं फलानि वदेत् ॥ १०॥

चतुरादिभिरेकस्यैः प्रव्रज्यां स्वां ग्रहः करोति बली ।
बहुवीर्यैस्तावत्यः प्रथमा वीर्याधिकस्यैव ॥ ११॥

तापसवृद्धश्रावककर्कवटाजीविभिक्षुचरकाणाम् ।
निर्ग्रन्थानां चार्कात् पराजितैः प्रच्युतिर्बलिभिः ॥ १२॥

दिनकरलुप्तमयूखैरवीक्षिता भक्तिवादिनतेषाम् ।
याचितदीक्षा बलिभिः पराजितैरन्यदृष्टैर्वा ॥ १३

इति प्रव्रज्यायोगविचारः ।

## अथ राशिशीलनिरुपणम्

अस्थिरविभूतिशित्रं चलनमटनं स्खलितनियममपि चरभे ।
स्थिरभे तद्विपरीतं क्षमान्वितं दीर्घसूत्रं (दीर्घसून्नं) च ॥ १॥

द्विशरीरे त्यागयुतं कृतज्ञमुत्साहितं विविधचेष्टम् ।
ग्राम्यारण्यजलोद्भवराशिषु विद्याच्च तच्छीलान् ॥ २॥

क्षेत्राधिपसन्दृष्टे शशिनि नृपस्तत्सुहृद्भिरापि धनवान् ।
द्रेष्काणांशपैर्वा प्रायः सौम्यैः शुभं नान्यैः ॥ ३॥

पुष्णन्ति शुभा भावान्मूर्यादीन् घ्नन्ति संस्थिताः पापाः ।
सौम्याः षष्ठेऽरिष्णाः सर्वेऽरिष्टा व्ययाष्टमगाः ॥ ४॥

कर्कवृषाजोपगते चन्द्रे लग्ने धनी सुरूपश्च ।
विकलाङ्गजडरिद्राः शेषेषु विशेषतः कृष्णे ॥ ५॥

विकलेक्षनोऽर्कलग्ने तैमिरिकोऽजे स्वभे तु राव्यन्धः ।
बुद्बुद्दृष्टः कर्किणि काणो व्ययगे शशांके वा ॥ ६॥

इष्टं पादविवृध्या मित्रस्वगृहत्रिकोणतुङ्गेषु ।
रिपुभेऽल्पं फलमर्कोपगतस्य पापं शुभं नैव ॥ ७॥

इति राशिशीलनिरूपणम् ।

आश्रययोग निरूपणम्

तस्करभोक्तृविचक्षणधनिनृपतिनपुंसका।भयदरिद्राः ।
ख(स्व)लपापोघ्नोकृष्टा मेषादीनां नवांशभवा ॥ १॥

कुलतुल्यकुलाधिकबन्धुमान्यधिनभोगिनृपसमनरेन्द्राः ।
स्वर्क्षगतैकविवृद्धया किञ्चिन्न्युनाः सुहृद्गृहगैः ॥ २॥

त्रिप्रभृतिभरुच्चस्थैर्नृपवंशभवा भवन्ति राजानः ।
पंचादिभिरन्यकुलोद्भवाश्च तद्वत्त्रिकोणगतैः ॥ ३॥

निर्धनदुःखितमूढव्याधितबन्धाभितप्तवधभाजः ।
एकोत्तरपरिवृध्या नीचगतैः शत्रुगृघगैर्वा ॥ ४॥

एकोऽपि नृपतिजन्मप्रदो ग्रहः स्वोच्चगः सुहृद्दृष्टः ।
बलिभिः केन्द्रोपगतैस्त्रिप्रभृतिभिरवनिपालभवः ॥ ५॥

वर्गोत्तमगे चन्द्रे चतुराद्यैर्वीक्षिते विलग्ने वा ।
नृपजन्म भवति राज्यं नृपयोगे बलयुतदशायाम् ॥ ६॥

उडुपतियोगसमागमभशीलसदर्शनानि भावाश्च ।
आश्रयराज्यप्रभावाश्चाध्यायेऽस्मिन् क्रमेणोक्ताः ॥ ७॥

इति लघुजातके प्रकीर्णाध्यायः द्वादशः ।

## अथ नाभसयोगाध्यायः ॥ १३॥

चर्मवनादिषु सर्वैराश्रयजा रज्जुमुसलयोगाः ।
ईर्ष्युमानी धनवान् क्रमेण कुलविश्रुताः सर्वे ॥ १॥

दलयोगौ (subtitlurile tin de comentariu)

केन्द्रत्रयगैः पापैः शुभर्दलाख्यावहिश्च माला च ।
सर्पेऽतिदुःखितानां मालायां जन्म सुखिनां च ॥ २॥

द्विरनन्तरकेन्द्रस्थैर्गदाविलग्नास्तसंस्थितैः शकटम् ।
स्वचतुर्थयोर्विहङ्गः श्रृङ्गाटकमुदयसुतनवगैः ॥ ३॥

श्रृणगाटकतोऽन्यगतैर्हलमेतेषां क्रमात्फलोपनयः ।
यज्वा शकटाजीवी दूतश्चिरसौम्ख्यभाक्कृषिकृत् ॥ ४॥

क्रूरैः सुखकर्मस्थैः सौम्यैरुदयास्तसंस्थिवज्र्नम् ।
यव इति तद्विपरीतैर्मश्रैः कमलं च्युतैर्वापी ॥ ५॥

लग्नादिकण्टकेभ्यश्चतुर्गृहावस्थितैर्ग्रहैर्योगाः ।
युपेषुशक्तिदण्दा वज्नादीनां फलान्यस्मात् ॥ ६॥

आद्यन्तयोः सुखयुतः सुख भाङ्मध्ये धनान्वितोऽल्पसुखः ।
त्यागी हिंस्त्रो धनवर्जितः पुमान् प्रियैर्वियुक्तश्च ॥ ७॥

तद्वत् सप्तभसंस्थैर्नौकूतच्छत्रकार्मुकाणि स्युः ।
नावाद्यैरप्येवं कण्टकान्यथैः स्मृतोऽर्धशशी ॥ ८॥

एकान्तरैर्विलग्नात्षङ्गवनावस्थितैर्ग्रहैश्चक्रम् ।
अर्थाच्च तद्वदुदधिनौप्रभृतिफलान्यथो क्रमशः ॥ ९॥

कीर्त्यायुक्तोऽनतवाक् स्वजनहितः शूरसुभगधनीभूपाः ।
इत्याकृतिजा योगा विंशतिरात्मगुणैस्तेषु नन्दन्ते ॥ १०॥

एकादिगृहोपगतैरुक्तान् योगान्विहाय सङ्ख्याने ।
गोल-युग-शूल-केदार-पाश-दामाख्य-वीणाः स्युः ॥ ११॥

दुःखितदरिद्रघातककृषिकरदुःशीलपशुपतिनिपुणानाम् ।
जन्म क्रमेण सुखिनः परभाग्यैस्सर्व एवैते ॥ १२॥

इति लघुजातके नाभसयोगाध्यायस्त्रयोदशः ।

## अथ स्त्रीजातकाध्यायः ॥ १४॥

त्रीपुंसोर्जन्मफलं तुल्यं कितत्वत्र लग्नचन्द्रस्थम् ।
तद्बलयोगाद्वपुराकृतिश्च सौभग्यमस्तमयात् ॥ १॥

युग्मर्क्षे लग्नेन्द्वोः प्रकृतिस्था रूपशीलगुणयुक्ता ।
ओजे पुरूषाकारा दुःशीला दुःखिता चैव ॥ २॥

अबले सप्तमभवने सौम्येक्षणवर्जिते च कापुरूषः ।
भव्ति पतिश्चरभेऽस्ते प्रवासशीलो भवेद्भ्रान्ती ॥ ३॥

बाल्ये विधवा भौमे पतिसन्त्यक्ता दिवाकरेऽस्तस्थे ।
सौरे पापैर्दृष्टे कन्यैव जारं समुपयाति ॥ ४॥

सितकुजजीवेन्दुसुतैर्बलिभिर्लग्ने समश्च यदि राशिः ।
स्त्री ब्रह्मवादिनी स्यात्सुशास्त्रकुशला प्रतीता सा ॥ ५॥

पुञ्जन्मफलं यद्यन्न घटति वनितासु तत्तासाम् ।
वक्तव्यं राज्याद्यं वृषणविनाशादि वा पापं ॥ ६॥

इति लघुजातके स्त्रीजातकाध्यायः चतुर्दशः ।

## अथ निर्याणाध्यायः ॥ १५॥

सूर्यादिभिर्निधनगैर्हुतवहहुसलिलायुधज्ज्वरामवजः ।
क्षुत्तृट्कृतश्च मृत्युः परदेशे नैधने चरभे ॥ १॥

यो वा निधनं पश्यति बलवाम्स्तद्धातुकोपजो मृत्युः ।
लग्नात् त्र्यांशपतिर्वा द्वाविंशः कार्णं मृत्योः ॥ २॥

सुरपितृतिर्यङ्नरकान् गुरुरिन्दुसितावसृग्रवी ज्ञयमौ ।
रिपुरन्ध्रत्र्यंशकपा नयन्ति चाऽस्तारिनिधनास्थाः ॥ ३॥

षष्ठाष्टमकण्टकगो गुरुरुच्चो भवति मीनलग्ने वा ।
शेषैरबलैर्जन्मनि मरणे वा मोक्षगतिमाहुः ॥ ४॥

गुरुरुडुपतिशुक्रौ पूर्यभौमौ यमज्ञौ
विबुधपितृतिरश्चो नारकीयांश्च कुर्युः ।
दिनकरशशिवीर्याऽधिष्ठितत्र्यंशनाथाः
प्रवरसमनिकृष्टास्तुङ्गह्रासादनूके ॥ ५॥

इति लघुजातके निर्याणाध्यायः पञ्चदशः ॥

## अथ नष्टजातकाध्यायः ॥ १६॥

गोसिंहौ जितुमाष्टमौ क्रियतुले कन्यामृगौ च क्रमात्
संवर्ग्या दशकाष्टसप्तविषयैः स्वसंख्यागुणाः ।
जीवारास्फुजिदैन्दवाः प्रथमवच्छेषा ग्रहाः सौम्यव-

द्राशीनां नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गणा ॥ १ ॥

सप्ताहतं त्रिघनभाजितशेषमृक्षं
दत्वाऽथवा नव शिशोध्य नवाऽथवा स्यात् ।
एवं कलत्रसहजात्मजशत्रुभेभ्यः
प्रष्टुर्वदेदुदयराशिवशेन तेषाम् ॥ २ ॥

वर्षर्तुमासतिथयो द्युनिशं ह्युडुनि
वेलोदयर्क्षनवभागविकल्पनाः स्युः ।
भूयो दशादिगुणिताः स्विवकल्पभक्ता
वर्षादयो नवकदानविशोधनाभ्याम् ॥ ३ ॥

विज्ञेया दशकेष्वब्दा ऋतुमासातथैव च ।
अष्टकेष्वपि मासार्धं तिथयश्च तथा स्मृताः ॥ ४ ॥

दिवारात्रिप्रसूतिं च नक्षत्रानयनं तथा ।
सप्तसङ्ख्येऽपि वर्गे तु नित्यमेवोपलक्षयेत् ॥ ५ ॥

वेलामथ विलग्नं च होरामंशकमेव च ।
पञ्चकेषु विजानीयान्नष्टजातकसिद्धये ॥ ६ ॥

इति वराहमिहिराचार्यकृते लघुजातके नष्टजातकाध्यायः षोडशः ।
समाप्तोऽयं ग्रन्थः ।



.. laghujAtakam ..
was typeset on July 26, 2016

Please send corrections to *sanskrit@cheerful.com*